e-Pathshala पाठशाला
A Gateway to all Post Graduate Courses

| | |
|---|---|
| विषयः (Subject) | संस्कृतम् (Sanskrit) |
| पत्रसंख्या (Paper Number) | 07 |
| पत्रविषयः (Title) | वैदिकसाहित्यम् इतिहासश्च (History of Vedic Literature) |
| पाठ्यांशसंख्या पाठ्यांशनाम च (Module Number& Module Name) | 17, वेदानां परिचयः अथर्ववेदस्य वैशिष्ट्यं च |
| पाठ्यांशतत्त्वानि (Focal Points of The Module) | • अथर्ववेदस्य परिचयः। <br>• श्रौतानां वैशिष्ट्यम्। <br>• अर्थर्ववेदस्य विश्वकल्याणाय उपयोगित्वम्। |
| प्रमुखान्वेषकः (Principal Investigator) | सह-प्रमुखान्वेषकः (Co-Principal Investigator) |
| प्रो.रमेशकुमारपाण्डेयः, कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री, पूर्वकुलपतिः,राष्ट्रीयसंस्कृतसंस्थानम्,नवदेहली सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः |

| | | |
|---|---|---|
| समन्वयकः (Co-ordinator) | पाठ्यांशलेखकः (Content Writer) | समीक्षकः (Reviewer) |
| प्रो. केदारप्रसादपरोहा आचार्यः, विशिष्टाद्वैतवेदान्तविभागस्य, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली | डॉ. नारायण होसमने सहायक आचार्यः, वेदविभागः, जगद्गुरु रामानन्दाचार्यराजस्थान-संस्कृतविश्वविद्यालयः, जयपुरम्, राजस्थानम् | प्रो. श्रीकिशोरमिश्रः संस्कृतविभागः, काशीहिन्दूविश्वविद्यालयः, वाराणसी |
| पाठ्यांशसंलग्नकम् (Module Tag) | SAN_P7_M17 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयसूची-

## १.० प्रस्तावना-

इह किल लोके प्रसिद्धाः चत्वारो वेदाः ऋग्वेद- यजुर्वेद- सामवेद- अथर्ववेद इत्यभिधीयमानाः अनन्ता मन्त्रराशयः भगवतः विराट्रूपस्य परम्ब्रह्मणः निश्वासरूपाः सन्ति। वेदाः नित्याः अपौरुषेयाश्च। अनन्तकोटिब्रह्माण्डानां नायकस्य जगदीश्वरस्य कृपया वेदमन्त्राणां राशिभ्यः एव इदमखिलं स्थावरजङ्गमात्मकं विश्वमाविर्बभूव। स एव परमेश्वरः सर्वात्मना आब्रह्मस्तम्बपर्यन्तं व्याप्तः सन् नियन्त्रयति। अत एव भगवान् चतुर्वेदभाष्यकृतसायणाचार्यो डिन्डिमघोषवदुद्घोषयन्ति वेदभाष्यारम्भे, यत्,

**यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।**
**निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ इति।**

अस्यार्थस्तु यस्य जगन्नियामकस्य परम्ब्रह्मणः विराट् संज्ञकस्य पुरुषस्य शरीरे श्वासोच्छ्वासरूपक्रियायां निश्वासरूपेण यो वायुः शरीरात् बहिर्निस्सरति तादृशा वेदाः नित्यरूपात् परमेश्वरात् आकाशे निस्सृताः। तथा च तेभ्य एव वेदेभ्यो अखिलं जगत् जडजङ्गमात्मकं विश्वमिदं सृष्टम्। अतः तादृशं विद्यातीर्थं नाम, ज्ञानस्य समस्तज्ञानानामाश्रयस्थानं महेश्वररुपिणं परमात्मानं वा ज्ञानदातृगुरुस्वरूपिणं वा तम् अहं प्रणौमीत्यर्थः।

वेदाः सकलज्ञानानामाकरभूताः सन्ति। युगयुगान्तरेषु यदा जगतः सृष्टि-पालन-प्रलयरूपस्थितयोऽपि नित्यरूपान् आकाशब्रह्मणि अवस्थितान् वेदमन्त्रराशीन् नाशयितुं न प्रभवन्ति। किन्तु वेदाः सूक्ष्मरूपेण आकाशे अन्तर्हिता भवन्ति। आदिकाले भूतभवद्भविष्यज्ञातारो कश्यपात्रिभरद्वाजादयो महर्षयः बहुभिः नैकविधैः तपोभिः सिद्धाः सन्तः, स्वयम्भुना परमेश्वरेण अनुज्ञाताः सन्तः वेदमन्त्रराशीन् मनसा दर्शनेन प्राप्नुवन्निति। महाभारते वनपर्वणि कृष्णद्वैपायनव्यासेनाख्यातम्। उक्तञ्च-

**युगान्तेन्तर्हितान् वेदान् सेतिहासान् महर्षयः।**
**लेभिरे तपसापूर्वमनुज्ञाताः स्वयम्भुवा॥ इति।**

## २.० वेदानां परिचयः-

तत्र वेदशब्दः विद् ज्ञाने इति परस्मैपदि अदादिगणे पठितो धातुः, अथवा विद् सत्तायाम् इति आत्मनेपदि दिवादिगणे पठितो धातुः, विदॢ- लाभे, अथवा विद् आप्तौ इति उभयपदि तुदादि गणे पठितो घञ् प्रत्ययेन युक्तः सन् वर्णप्रक्रियानन्तरं 'वेदः' इति सिद्धपदं भवति। प्रसिद्धोऽयं श्लोकः यत्-

**सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।**
**विन्दते विन्दति प्राप्तौ श्यन् लुक्श्नंशेष्विदं क्रमात्।।** इति।

तत्रादौ वेदाः समष्ट्यात्मकेन मन्त्रराशयः अध्ययनाध्यापनरूपेण प्रचलिताः आसन्। तेन समष्ट्यात्मकमन्त्रराशिभ्य एव प्राचीनाचार्यमहर्षिभिः समस्ता श्रौतस्मार्तयज्ञाः सर्वे सम्पादिता अभूवन्। गच्छताकालेन ऋषीणां वेदविदां सामान्यजनानाञ्च मेधाशक्तेः ह्रासादिकं भूत्तभवद्भविष्यज्ञानदृष्ट्या तत्वतो ज्ञात्वा भगवान् वेदव्यासः श्रौतस्मार्तयज्ञानुष्ठानान् व्यवस्थितक्रमेण सम्पादनाय समग्रं वेदं चतुर्धा व्यभजत्। त एव ऋग्वेदः, यजुर्वेदः, सामवेदः, एवम् अथर्ववेद इति नाम्ना प्रसिद्धिं प्राप्नुवन्। सैव चातुर्होत्रपरम्परा इति कथ्यते। तत्र ऋग्वेदे समस्तदेवतानां स्तुतिपरका मन्त्रा अत्र संवलिता भवन्ति। श्रौतयज्ञेषु होता नामको ऋत्विक् अस्य ऋग्वेदस्य अधीतवेदः सम्यक् ज्ञाता च भवति। तत्र श्रौतयज्ञेषु ब्रह्मणा ऋत्विजा देवताह्वानाय स्तुतये अनुज्ञां प्राप्य सम्बद्धदेवतामन्त्रस्तोमान् होता उच्चारयेत्। होता नाम देवतान् मन्त्रोच्चारणेन आह्वाता इत्यर्थः। एवं यजुर्वेदाध्येता अधीतयजुर्वेदः यज्ञेषु अध्वर्यु संज्ञकं पदमलंकरोति। यज्ञेषु ब्रह्मणा अनुज्ञां प्राप्य अध्वर्युः आहूतदेवतानुद्दिश्य हविषामाहुतिं कुण्डे प्रददाति। अध्वरस्य यज्ञस्य सम्पूर्णतया धुरं दधातीति अध्वर्युः। भगवता यास्केन निरुक्तग्रन्थे अध्वर्युपदनिर्वचनमेवं युक्तं यत्, "अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्यनेता अध्वरं कामयत इति वा, अपि वाधीयानेयुरपबन्धो अध्वर इति यज्ञ नाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः" इति। श्रौतयज्ञेषु पूर्वोक्तवद्ब्रह्मणा अनुज्ञां प्राप्य उद्दिष्टदेवतान् साममन्त्रैः गानं यः करोति स ऋत्विक् उद्गाता इति संज्ञको भवति तत्र श्रौतयज्ञेषु व्यवस्थितक्रमेण एकदा एकामेव देवतामुद्दिश्य, नाम यां देवतां, होता मन्त्रेण शंसति तामेव देवतां मन्त्रेण उद्गाता गानं सम्पादयति। तामेव देवतोद्दशक हविषः आहुतिं अध्वर्युः ददाति। अतः मन्त्राणां सामानि यो गायति स उदगाता सामवेदस्य

अधीतविद्यो भवति। चतुर्थवेदस्य नाम अथर्ववेदस्य ज्ञाता श्रौतयज्ञेषु ब्रह्मा नाम ऋत्विक् भवति। स एव ब्रह्मा प्रामुख्येण यज्ञस्य सर्वतोमुखेण समृद्धिं सम्पादयति। यज्ञमण्डपे दक्षिणदिशि उत्तराभिमुखोपविश्य ब्रह्मजपमनुजपन् द्यावापृथिवीसमीक्षमाणः उपविशति। यज्ञसम्पादनावसरे कुतश्चिदपि दोषः न भवेदिति धिया सर्वतोभावेन यज्ञं नियन्त्रयति। यदि कुत्रचिद्दोषो भवति चेत् तद्दोषापनोदनाय नैकविधप्रायश्चित्तार्थमप्यनुज्ञापयति। श्रौतयज्ञेषु अन्ये त्रयः होताध्वर्यूद्गातारः क्रमशः ऋग्यजुस्साममन्त्रैः सहकृतैरनुष्ठानैः श्रौतयज्ञस्य पूर्णतया वाक्शरीरं निष्पादयन्ति, परन्तु ब्रह्मा एक एव अधीताथर्ववेदः तथा सर्वविद्यश्च सन् श्रौतयज्ञस्य पूर्णतया धुरं वहन् मनश्शरीरं निष्पादयति अयं विषयिका सूक्तिः एतरेय ब्राह्मणे श्रूयते। यत्–

अयं वै यज्ञो योऽयं पवने। तस्य वाक्यमनश्च वर्तन्यौ। वाचा च हि मनसा च यज्ञोऽवर्तत। इयं वै वाग्। अदो मनः। तद् वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति। मनसैव ब्रह्मा संस्करोति। (ऐ.ब्रा. 5.33)

गोपथब्राह्मणेप्याम्नातम्– अथ ह प्रजापतिः सोमेन यक्ष्यमाणो वेदानुवाच– कं वो होतारं वृणीयाम्। कम् अध्वर्युम्। कम् उद्गातारम्। कं ब्रह्माणम् इति। त ऊचुः ऋग्विदमेव होतारं वृणीष्व। यजुर्विदम् अध्वर्युम्। सामविदम् उद्गातारम्। अथर्वाङ्गिरोविदं ब्रह्माणम्। तथा हास्य यज्ञः .... चतुष्पात् ....... प्रतितिष्ठति।'' (गो.ब्रा. 1.2.24) इति।

एवमेव अनुष्ठानं विधेयम्। नो चेत् यज्ञः समृद्धिं न प्राप्नोति भ्रष्टो यज्ञः भवति। उक्तञ्च–

''अथ चेन्नैवं विदं ब्रह्माणं वृणुते दक्षिणत एवैषां यज्ञोरिच्यते।'' (गो.ब्रा.– 1.2.24)

उपमानञ्च श्रूयते। यत्– यथैकपात् पुरुषो यो अनुभयचक्रो वा रथो वर्तमानो भ्रेषं न्येति एवमेवास्य यज्ञो भ्रेषं न्येति। (गो.ब्रा. 1.3.2) इति।

## ३.० वेदानां शाखाभेदाः–

एवम्प्रकारेण चत्वारोऽपि वेदाः श्रौतयज्ञानां सम्पादनाय सर्वथा उपकारका भवन्ति। ते च वेदाः भगवता वेदव्यासेन चतुर्धा विभक्ता अपि गच्छताकाले ब्रह्मर्षीणां तपोबलैश्च अनेकानेकशाखोपशाखैः प्रसृताः। एवं ऋग्वेदस्य शाकला, बाष्कला इत्यादयो एकविंशतिः

शाखाः अभवन्। यजुर्वेदस्य तु एकशतशाखा आसन्। सामवेदे तु सहस्रशाखा आसन्। एवम् अथर्ववेदेऽपि पैप्पलादा शौनका इत्यादयो नवशाखाः आचार्यगुरुपरम्परानुगताः आसन् इति वैयाकरणमहाभाष्ये श्रूयते। उक्तञ्च–

"एकविंशतिधा बाहुवृच्यम्। एकशतमध्वर्युशाखाः। सहस्रवर्त्मा सामवेदः। नवधाथर्वणोवेदः" इति (प.महाभाष्यम्)

एवम्प्रकारेण चत्वारोऽपि वेदाः अस्माकं भारतवर्षे सर्वत्र आसप्तसिन्धुसरिद्भ्यः कन्याकुमारी पर्यन्तम् आगुर्जरम् वङ्गदेशपर्यन्तं गुरुशिष्यपरम्परानुसारेण आहत्य एकत्रिंशदुत्तरैकशताधिकैकसहस्रशाखाः (1131) वैदिकसम्प्रदायगताः आसन्। तत्र प्रकरणानुसारेण अथर्ववेदस्य नवशाखाः आसन्। ताश्च– पैप्पलादाः, नौदाः, मौदाः, शौनकीयाः, जाजलाः, जलदाः, ब्रह्मवदाः, वेददर्शाः, एवं चारणवैद्याश्च। तत्र पूर्वोक्तासु चतुर्णां वेदानां शाखापरम्परासु अधिकाः शाखाः लुप्ता सन्ति। काश्चन एव शाखाः सम्प्रदायेषु प्रचलिताः वर्तन्ते।

प्रत्येकस्मिन् वेदेऽपि मूलग्रन्थरूपेण संहिताभागः, ब्राह्मणभागः, आरण्यकभागः, उपनिषद्भागश्चेति भवन्ति। ब्राह्मणं नाम संहिताग्रन्थोक्तानां मन्त्राणां व्याख्यानात्मकोग्रन्थः। मन्त्राणां महत्वम्, तैस्सहकृत अनुष्ठानानि, तेषां प्रयोजनानि, अनुष्ठानफलानि च सोदाहरणं वर्णितानि भवन्ति। तत्र आधानाग्निहोत्रदर्शपूर्णमासादि सप्तहविर्यज्ञानां वर्णनानि, सप्तपाकयज्ञानां सप्तसोमयज्ञानां महत्वानि तेषां प्रयोजनानि विस्तृतं वर्णितानि।

तत्र ऋग्वेदे ऐतरेयब्राह्मणम्, कौशीतकीब्राह्मणञ्च प्रसिद्धौ। शुक्लयजुर्वेदे शतपथब्राह्मणञ्च भवति। कृष्णयजुर्वेदे तु तैत्तिरीयब्राह्मणमनुस्मर्यते। सामवेदे तु ताण्ड्यमहाब्राह्मणम् एवञ्च सामविधानब्राह्मणम्, संहितोपनिषद्ब्राह्मणम्, षड्विंशब्राह्मणम्, तल्वकारब्राह्मणम्, आर्षेयब्राह्मणञ्चेति प्रसिद्धानि। अथर्ववेदे तु एकमेव गोपथब्राह्मणम् अध्ययनाऽध्यापनपरम्परासु प्रचलति। तत्र उपनिषत्सु चुतुर्णामपि वेदानां संहिताभागेषु पठिताः काश्चन, ब्राह्मणग्रन्थेष्वागताः काश्चन, आरण्यकभागेषु पठिता काश्चन इति अन्याश्च लुप्तसन्दर्भाः सम्प्रदायेष्वनुसृताश्चेति।

आरण्यकं नाम अरण्ये अध्ययनात् आरण्यकमित्युच्यते। पितृकर्मणां विधीनाम् आध्यात्मिकानाम् उपासनाविधीनां क्वचित् सन्यासपदग्रहणविधीनां वर्णनानि आरण्यकग्रन्थेषु

अधीयन्ते। मुमूक्षूणां कृते संसारात् विरक्तानां कृते उपासनाविधयः अध्यात्मिकज्ञानमवाप्तये आत्मज्ञानाय च आरण्यकग्रन्थाः बहूपकुर्वन्ति।

उपनिषद्ग्रन्थेषु आध्यात्मिकतत्वानां जीवब्रह्मणोरैक्यप्रतिपादकानामद्वैततत्वानां विषयाः नैकविधसुललितैः सरलतरैरुपायैः वर्णिताः भवन्ति। तत्र अहं ब्रह्मास्मि, अयमात्मा ब्रह्म, तत्वमसि, प्रज्ञानं ब्रह्मेत्याख्य महावाक्यानां सिद्धान्ताः अतीवसरलतरैर्निरूपिताः सन्ति। तत्र दशोपनिषदः भवन्ति। यत्–

**ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः।**
**ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं दश॥**

शताधिका उपनिषदः अध्ययनाध्यापनपरम्परासु प्रवर्तन्ते। तत्रोपनिषदां तु मोक्ष एव परमपुरुषार्थः। अतः आत्मज्ञानावाप्तये उपनिषत्सु सर्वत्र सुललितरोदाहरणैः ब्रह्मज्ञानविषयका वैदिकसनातन–अद्वैततत्वसिद्धान्ताः भृशमुपबृंहिताः सन्ति।

तथा च चतुर्णामपि वेदानाम् उपवेदरूपेण प्रसिद्धाः केचन ग्रन्थाः सन्ति। तत्र आयुर्वेदः ऋग्वेदस्योपवेदः, यजुर्वेदस्य च धनुर्वेदः उपवेदरूपेण पठितः। तथा सामवेदस्योपवेदरूपेण गान्धर्ववेदः उपदिष्टः। एवञ्चाथर्ववेदस्योपवेदरूपेण अर्थवेदः अर्थशास्त्रं वा शस्त्रविद्या वा अधीयते। एवं वेदशाखानां विस्तृतरूपेण शाखोपशाखानां अध्ययनाऽध्यापनपरम्परा अस्माकं भारतवर्षे प्रचलिता आसीत्।

महर्षिणा शौनकेन प्रोक्तः चरणव्यूहाख्यो ग्रन्थः अतीव प्राचीनतया समस्तवेदशाखानां वैदिककालेषु प्रचलितानां मूलशाखोपशाखानामभिलेखग्रन्थरूपेण वरीवर्ति। तत्रापि शौनकोक्तः चरणव्यूहः, कात्यायनोक्तश्चरणव्यूहः एवम् अथर्ववेदान्तर्गत अथर्वपरिशिष्टोक्तश्चरणव्यूह इति च उपलभ्यन्ते।

**वेदाङ्गानि–**

वेदमन्त्राणामुच्चारणपद्धतीनामवगमाय हस्तस्वरदर्शनपरिज्ञानाय, मन्त्राणामर्थतो ज्ञानाय विविधप्रकाराणां मन्त्रार्थानुसन्धानाय, गायत्र्यादि नैकविधछन्दोबद्धानां मन्त्राणामनुष्ठानाय श्रौतस्मार्तयज्ञानुष्ठानानां परिज्ञानाय एवञ्च अमावास्या पूर्णिमादिविहितमुहूर्तेषु यज्ञानुष्ठानानां निर्वर्तनाय वेदाङ्गानां सृष्टिराविरभूत्। तानि च वेदाङ्गानि–

**शिक्षा व्याकरणं निरुक्तं ज्योतिषं तथा।**
**कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः॥** इति।

**शिक्षा**-

वेदमन्त्राणामुच्चारणविधयः शिक्षाग्रन्थेषु विहिताः सन्ति। तत्र वर्णानामुच्चारणप्रकाराः, ह्रस्वदीर्घप्लुतादयः, उदात्तानुदात्तस्वरितविषयाः, द्रुतविलम्बितमध्यमवृत्तिभिः मन्त्राणां पाठोच्चारणविधयः, पदपाठः, क्रमपाठः, जटापाठः, एवं घनपाठाख्याः विकृतिपाठाः शिक्षाग्रन्थेषु तथा प्रातिशाख्यग्रन्थेषु सविस्तरं वर्णिताः सन्ति। तत्र प्रत्येकस्मिन् वेदेऽपि शिक्षाग्रन्थाः पृथक्-पृथक्तया उपलभ्यते तद्यथा- ऋग्वेदे पाणिनीयशिक्षा, यजुर्वेदे शुक्लयजुषासम्बद्धा याज्ञवल्क्यशिक्षा, कृष्णयजुर्वेदान्तर्गतया व्यासशिक्षा, सामवेदे नारदीयशिक्षा, अथर्ववेदे माण्डूकीशिक्षा च। एवं शिक्षाग्रन्थाः वर्णानामुच्चारणज्ञानायोपकुर्वन्ति।

**व्याकरणम्**-

वेदमन्त्रेष्ववस्थितानां शब्दानां शब्दरुपधातुरूपाणां निर्माणनियमाः, प्रकृतिप्रत्ययादीनां विधयः उदात्तानुदात्तानां नियमाः, विविधसन्धीनां नियमाः, एवञ्च शब्दानां प्रकृतेः प्रत्ययस्य च स्वरूपावधारणं तेषामर्थनिर्धारणञ्चेति अनेके विषयाः व्याकरणशास्त्रे विचार्यन्ते। वेदमन्त्राणां सामान्यतोऽर्थनिर्धारणाय व्याकरणशास्त्रमतीव प्राधान्येन उपकरोति। व्याकरणशास्त्रान्तर्गता संस्कृतभाषायाः मूलं तु प्रातिशाख्यमेव। वैदिककालेषु व्याकरणज्ञानाय प्रातिशाख्यग्रन्था एव अधीयन्ते स्म। प्राचीन प्रातिशाख्यग्रन्थानामेव विस्तृतरूपेण सरलतरेण रीत्या संस्कृतभाषा प्रथिता। प्रत्येकस्मिन् वेदेऽपि लक्षणग्रन्थरूपेण प्रातिशाख्यग्रन्था आसन्। ऋग्वेदे शौनकोक्तं प्रातिशाख्यमुपलभ्यते। शुक्लयजुर्वेदे कात्यायनोक्तं यजुःप्रातिशाख्यम्, कृष्णयजुर्वेदे तैत्तिरीयप्रातिशाख्यमनुसर्यते। सामवेदे तु सामप्रातिशाख्यान्तर्गतया पुष्पसूत्रम् तथा पञ्चसूत्राणि च अधीयन्ते। अथर्ववेदे अथर्वप्रातिशाख्यम् (शौनकीय चतुरध्यायिका) आथर्वणिकशब्दानां परिज्ञानाय सहकरोति। एवं व्याकरणं वेदमन्त्रगतशब्दानां अर्थनिर्णयायोपयोगी भवति।

**छन्दः-**

अनन्तकोटिसंख्याभिः विस्तृता वेदमन्त्रराशयः गायत्र्यादिभिश्छन्दोभिः निबद्धाः सन्ति। विना छन्दसा मन्त्रस्य मन्त्रत्वमेव न भवति। गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्तित्रिष्टुब्जगतीति सप्त छन्दांसि। एतेषामेव सप्तछन्दसां शाखोपशाखया शताधिका छन्दोबद्धा मन्त्राः काश्यपादि ब्रह्मर्षिभिः दर्शनेनानुप्राप्ताः परमेश्वरस्य कृपया। प्रत्येकस्यापि मन्त्रस्य ऋषिः देवता छन्द इति निर्धारणं भवति। तेषां मन्त्राणां श्रौतयज्ञादिषु स्मार्तयज्ञादिषु च विनियोगेषु ऋषि-छन्दो-देवतोच्चारणपुरस्सरमेव अनुष्ठानानि प्रवर्तन्ते। तेनैवकृतेनानुष्ठानेन यज्ञः सफलः समृद्धश्च भवति। परम्परागतरीत्या पिङ्गलनागेन कृत पिङ्गलछन्दस्सूत्रग्रन्थः एक एवोपलभ्यते। गायत्रीछन्दसि चतुर्विंशत्यक्षराणि (24) पादत्रयश्च भवति। एवं चतुश्चतुरक्षरवृध्या उष्णिगादि छन्दांसि ज्ञायन्ते। मन्त्राणां छन्दोज्ञानेन वेदार्थज्ञानायातीव सौकर्यं भवति।

**निरुक्तम्-**

वेदमन्त्रेष्ववस्थितानां शब्दानां निर्वचनपूर्वकं विविधप्रकारैः अर्थनिर्णयायोपकारकं शास्त्रं निरुक्तशास्त्रं भवति। निरुक्तंविना केनापिप्रकारेण वेदमन्त्राणां निष्कृष्टरूपेण अर्थनिर्णयं कर्तुं न पार्यते। भगवता यास्केन निरुक्ताख्यो ग्रन्थः प्रणीतः। निघण्टुनाम्नः वैदिकशब्दपर्यायपदकोशस्य व्याख्यानात्मको निरुक्तग्रन्थः। तत्र काण्डत्रयरूपेण नैघण्टुकं काण्डम्, नैगमं काण्डम्, दैवतं काण्डञ्चेति भवति। तत्र निरुक्ते पूर्वषट्कोत्तरषट्करूपेण षण्णां षण्णामध्यायानां समूहः आहत्य द्वादशाध्यायाः पुनः परिशिष्टरूपेण द्वे अध्यायौ भवतः। सम्पूर्णतया चतुर्दशाध्यायाः निरुक्ते सन्ति। तत्र ''प्रकरणशः अर्था निर्वक्तव्याः'' इति सिद्धान्तानुसारेण निरुक्ते वेदमन्त्राणां आध्यात्मिकार्था, आदिदैविकार्था, याज्ञिकार्थाः, प्रथमपुरुषयोगार्थाः, मध्यमपुरुषयोगार्थाः, उत्तमपुरुषयोगार्था इति नैकविधरीत्या मन्त्रार्थानुसन्धानविधयः निरुक्ते सविस्तरं वर्णिताः। तत्र भाषाविज्ञानस्य मूलस्रोतांसि चोपलभ्यन्ते। विशेषतः गीर्वाणभाषाया मूलरूपेण नामाऽख्यातोपसर्गनिपातानां सविस्तरं वर्णनमुपलभ्यते। एवं वेदमन्त्राणामर्थानुसन्धानाय निरुक्तग्रन्थः प्रतिपदं सहकारी भवति।

**ज्योतिषम्**-

श्रौतस्मार्तयज्ञानुष्ठानानां ज्योतिषशास्त्रेण सह अविनाभावसम्बन्ध प्राचीनवैदिककालत एव प्रवर्तते। तत्र कृत्तिकाद्यारभ्य भरणिनक्षत्रपर्यन्तं यद्यपि गणनापद्धतिरस्ति तथापि मेषादिद्वादशराशीनां क्रमः अश्विनीनक्षत्रादारभ्य एव भवति। त्रिस्कन्धज्योतिषशास्त्रपद्धतीनां मूलस्रोतांसि वेदेष्वेव निहिताः सन्ति। तत्र ज्योतिषाधारेणैव समस्त श्रौतस्मार्तयज्ञानुष्ठानानां षोडशसंस्कारकर्मणां कर्म चयश्च श्रौतसूत्राभिहित ''अमावास्यायामग्न्याधानम्'' इति कृष्णपक्षस्य अमावस्यातिथ्यां सम्पाद्यते सर्वत्र। तथा प्रतिमासं पूर्णमासी तिथौ पूर्णमासेष्टि यज्ञः एवं अमावास्या प्रतिपत्तिथौ दर्शेष्टियज्ञ इति एवं मासात्मको दर्शपूर्णमासेष्टिः भवति। ''सायम्प्रातरग्निहोत्रम्'', एवं आग्रहणेष्टिः मार्गशीर्षमासे मृगशिरा नक्षत्रयुक्तिथौ सम्पाद्यते। एवं सर्वे वैदिकानुष्ठानकार्यक्रमाः ज्योतिषाधारित शुभमुहूर्त्तमाश्रित्यैव भवन्ति। तिथि-वार-नक्षत्र-योग-करणाख्य पञ्चाङ्गात्मकज्योतिषशास्त्रस्य वैदिकानुष्ठानैस्सह अन्योन्यसम्बन्धत्वादेव प्रधानतया परिगण्यते। उक्तञ्च-

**यथा शिखा मयूराणां नागानां मणयो यथा।**
**तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम्॥** इति।

ज्योतिषशास्त्रे मूलग्रन्थरूपेण लगधमुनिप्रणीतः एक एव ग्रन्थः ''वेदाङ्गज्योतिषम्'' अस्ति। स्मार्तयज्ञाः, संस्कारकर्माणि अन्यानि च नित्यनैमित्तिककाम्यानुष्ठानानां प्रयोगाः वर्णिताः सन्ति। कल्पसूत्राणि चतुर्धा विभक्तानि सन्ति- (क) श्रौतसूत्रम्, (ख) गृह्यसूत्रम्, (ग) धर्मसूत्रम्, (घ) शुल्बसूत्रञ्चेति।

**(क) श्रौतसूत्रम्**- श्रौतसूत्रेषु श्रुतिः नाम वेदः। वेदेषु प्रतिपादिता आधानाग्निहोत्रादि सप्तहविर्यज्ञसंस्थाः, अग्निष्टोमादि सप्तसोमासंस्थागतयज्ञाः केचन काम्ययज्ञाश्च विहिताः सन्ति। तत्र सप्त हविर्यज्ञाः एते भवन्ति- अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणेष्टिः, पिण्डपितृयज्ञः, चातुर्मास्यः, निरूढपशुबन्धः, सौत्रामणीयज्ञश्च। एते सर्वे यज्ञाः अत्र सूत्रनिर्देशपूर्वकं निगदिताः। सप्त सोमयज्ञाश्च सन्ति। अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, अप्तोर्यामा च। सर्वेप्येते यज्ञाः श्रौतसूत्रेषु सूत्रवद्विहिताः सन्ति। चतुर्ष्वपि वेदेषु पृथक् पृथक्तया श्रौतसूत्राणि सन्ति। ऋग्वेदे आश्वलायनश्रौतसूत्रम्,

शुक्लयजुर्वेदे कात्यायनश्रौतसूत्रम्, यजुर्वेदे बौधायन एवं आपस्तम्ब श्रौतसूत्रे, सामवेदे लाट्यायन एवं द्राह्यायण श्रौतसूत्रे, तथा च अथर्ववेदे वैतानश्रौतसूत्रञ्च।

**(ख) गृह्यसूत्रम्**- पञ्चमहायज्ञानां सप्तपाकयज्ञानां षोडशसंस्काराणामन्येषां काम्यानुष्ठानविधीनां प्रयोगाः सूत्रवद्विहिताः सन्ति। सप्त पाकयज्ञाश्च एते सन्ति। औपासनम्, वैश्वदेवः, पक्षश्राद्धम्, मासिश्राद्धम्, अष्टकाश्राद्धम्, श्रवणाकर्म, शूलगवश्च। गृह्यसूत्राण्यपि चतुर्षु वेदशाखासु पृथक्तया सन्ति। ऋग्वेदे आश्वलायनगृह्यसूत्रम्, शुक्लयजुर्वेदे पारस्करगृह्यसूत्रम्, कृष्णयजुर्वेदे बोधायनगृह्यम्, आपस्तम्बगृह्यसूत्रञ्च। सामवेदे गोभिलगृह्यसूत्रम्, द्राह्यायणगृह्यसूत्रम्, जैमिनीयगृह्यसूत्रञ्च। अथर्ववेदे कौशिकगृह्यसूत्रञ्च।

**(ग) धर्मसूत्रम्**- धर्मसूत्रेषु धर्माचरणविषयाः ब्राह्मणक्षत्रियवैश्यशूद्रवर्णानां स्वस्वाचारनियमाः, वर्णाश्रमधर्माः, ब्रह्मचारीगृहस्थ-वानप्रस्थ-सन्यासविधयः सूत्रबद्धा, श्लोकैरपि सविस्तरं वर्णिताः। तत्र बौधायनधर्मसूत्रं, गौतमधर्मसूत्रञ्च। धर्मार्थकाममोक्षाख्य चतुर्विधपरमपुरुषार्थानां प्राप्तये धर्मसूत्रविहितानामाचरणं शिष्टैरनुसर्यते।

**(घ) शुल्बशूत्रम्**- वेदेषु विहितानि श्रौतस्मार्तयज्ञानुष्ठानानि यथाक्रमेणोक्तप्रकारैः यज्ञवेदीनां परिमाणपूर्वकं निर्मितैः, यज्ञपात्रादीनां यथापरिमाणं निर्मितैः, तथा यज्ञमण्डपादीनामपि यथापरिमाणं निर्मितैः एवं सहकृतप्रकारैः सम्मादितैरेव समृद्धानि भवन्ति। यज्ञकर्मणां साकल्यं शुल्बसूत्रोक्तप्रकारैः यज्ञवेद्यादीनां निर्माणैः तैस्सहकृतानुष्ठानैरेव भवति। अतः शुल्बसूत्रग्रन्थेषु यज्ञवेद्यादीनां निर्माणप्रकाराः, श्रौतस्मार्तयज्ञमण्डपादीनां परिमाणविषयाः वर्णिताः। तत्र प्राचीन शुल्बसूत्ररूपेण बौधायनशुल्बसूत्रम्, आपस्तम्बशुल्बसूत्रम्, कात्यायनशुल्बसूत्रम्, मानवशुल्बसूत्रमिति च। यथा शास्त्रं परिमाणैर्निर्मितैरनुष्ठानैः श्रौतस्मार्तयज्ञानुष्ठानैः मन्त्रार्थानुसन्धानेष्वपि परमोपयोगाः भवन्ति। यतो हि यज्ञानुष्ठानप्रयोग एव ज्ञानार्थं प्रवृत्तिं जनयति। अतः यथालक्षणसहकृतैरनुष्ठानैः चतुर्विधपुरुषार्थाः सिध्यन्ति। अस्तु।

**वेदानां महत्त्वम्**-

वेदाः समस्तज्ञानानामाधारभूताः सन्ति। विश्वसंस्कृतिरपि वैदिकसनातनपरम्परामूलादेव विनिस्सृता। वेदेभ्य एव विश्वस्मिन् प्रथमतः ज्ञान-विज्ञानानां नैकविधपद्धतयः प्रसारिताः।

समस्त विश्वस्य कल्याणाय एवं विश्वस्य सर्वविधसमृद्धये वेदाः सदैव प्रेरयन्ति। समस्तधर्मणां मूलाधाररूपेण चत्वारो वेदाः सर्वत्र प्रकाशन्ते। अत एवोक्तं भगवता मनुना मनुस्मृतौ–

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**............................... मात्मनस्तुष्टिरेव च॥** (मनु. 2.6)
**यः कश्चिद् कस्यचिद्धर्मो मनुना परिकीर्तितः।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥** (मनु. 2.7)

धर्मार्थकामोक्षाणां प्राप्तये सर्वैर्योग्यतासम्पन्नैरवश्यं वेदाध्ययनं विधातव्यम्। शास्त्रकारैः वेदानां महत्वं ज्ञातृभिश्च वेदस्य स्वतः प्रामाण्यं सिद्धान्तितम्। वेदाध्ययनमेव जगति परमं तपः ब्राह्मणेन निष्कारणेन षडङ्गोवेदोऽध्येयो ज्ञेयश्च। (माहाभाष्यम्)

**वेदमेव सदाऽभ्यस्येत् तपस्तप्यन् द्विजोत्तमः।**
**वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥** (मनु. 2.166) इति।

अखिलवेदेषु सामाजिकजीवनस्योन्नतेः आदर्शविचाराः, विश्वबन्धुत्वविचाराः, जगतः कल्याणाय च कर्त्तव्याः विविधोपायाः बहुत्र निर्देशिताः सन्ति। वैदिकसनातनसंस्कृतेः वैशिष्ट्यानि, आर्यकुलानां जनजीवनविषयाः बहुविस्तरेण वेदेषु निगदिता। आर्यजनाः यज्ञानुष्ठानेषु श्रद्धावन्तः आसन्। एकेश्वरवादमनुमन्यामनास्ते बहुदैवतवादमप्यनुसरन्ति स्म। भगवतः सर्वत्र व्याप्तित्वम्, ज्ञानकर्मणो समन्वयभावम्, पुनर्जन्मनि च विश्वासविचाराः। तदनुसारीणि यज्ञानुष्ठानानि च आचरन्ति स्म इति वेदमन्त्रेभ्य एव प्रमाणान्युपलभ्यन्ते। उक्तञ्च–

**सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक्।**
**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥ ( मनु. १.२१ )**
**सा प्रथमा संस्कृतिर्विश्ववारा** ............ (यजु. 7.14) इत्यादि।

भगवता प्राचीनस्मृतिकारेण मनुना ज्ञानविज्ञानादिसमस्तशास्त्राणां मूलत्वेन वेदस्य प्राशस्त्यं वर्णयता वेदेषु बीजरूपेण दार्शनिकाः सिद्धान्ताः, राजनीतिः, अध्यात्मम्, समाजशास्त्रम्, मनोविज्ञानम्, आयुर्वेदः, गणितशास्त्रम्, अर्थशास्त्रम्, नाट्यशास्त्रम्, काव्यशास्त्रम्, कामशास्त्रम्, अन्याश्च विविधाः कलाश्च मन्त्रार्थानुसन्धानैर्लभ्यान्ते इति

मनुस्मृतौ प्रतिपादितम्। प्राचीननाट्यशास्त्रप्रणेत्रा भगवता भरतमुनिना नाट्यशास्त्रग्रन्थारम्भे एवं प्रारम्भं कृतं, यत्-

**जग्राह पाठ्यम् ऋग्वेदात् सामभ्यो गीतमेव च।**
**यजुर्वेदादभिनयान् रसानाथर्वणादपि॥** (ना.शा. 1.17)

जगतः कल्याणाय ब्राह्मणक्षत्रियविटशूद्रपञ्चमाख्यानां समस्तलोकजनानां कृते परस्परं स्वस्वकुलधर्माचारेषु नैरन्तर्येण प्रवृत्तिं धर्मशास्त्राणि बोधयन्ति। सर्वेषां कृते श्रुत्युक्तेषु मार्गेषु स्मृतिग्रन्थोक्तेषु आचारेषु आत्मसन्तुष्टिभावञ्च वेदाः पतिपादयन्ति।

**श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।**
**इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥**

वैदिकग्रन्थेषु लोककल्याणाय जनानामार्थिकसमृद्धिप्राप्तये कृषिकर्मणां समृद्धये च बहवोप्युपायाः तत्र निर्देशिताः सन्ति। गोमहिषादिसमाजोपयोगिपशूनां समृद्धिद्वारा कृषिधान्यानां समृद्धये नैकविधोपायाः वेदेषु लभन्ते। अत एव तत्र तत्र राष्ट्रसमृद्धिकर्माणि, गोष्ठसमृद्धिकर्माणि, कृषिसमृद्धिकर्माणि चान्ये अनेकानेक समाजोपयोगि अनुष्ठानानि वेदेषु वर्णिताः अतएव वेदानां लोकल्याणाय बहुमहत्वं भवति।

**अथर्ववेदस्य परिचयः-**

अथर्ववेदः, अङ्गिरो वेदः, अथर्वाङ्गिरसवेदः ब्रह्मवेदः, भृग्वङ्गिरोवेदः, छन्दो वेदः, क्षत्रवेदः, भैषज्वेद इत्याद्यभिधानैः प्रसिद्धोऽथर्ववेदः न केवलं पारलौकिकफलानि, ब्रह्मज्ञानावाप्त्यादि कामान् साधयत्यपितु अस्मिन् जगति जनानामपेक्षितफलान् अन्नसमृद्धिधनकनकभूसौभाग्यैश्वर्यपुत्रपौत्रादिसकल ऐहिकफलानि च विशेषतः पूरयति। जगतः कल्याणाय सर्वत्र सुभिक्षशान्तिसौमनस्यादि विश्वस्मिन् स्थापनाय च अथर्ववेदे नैके श्रौतस्मार्तयज्ञानुष्ठानप्रयोगाः सविस्तरं वर्णिताः। अत एव चतुर्वेदभाष्यकृतो सायणाचार्याः अथर्वमन्त्रभाष्यारम्भे एव वेदस्य माहात्म्यं स्पष्टीकुर्वन्ति। यत्-

**व्याख्याय वेद त्रितयम् आमुष्मिकफलप्रदम्।**
**ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति॥** इति।

अथर्वशब्दनिर्वचनं निरुक्तग्रन्थे एवं श्रूयते यत्, ''अथर्वाणो अथनवन्तः। थर्वतिश्चरतिकर्मा तत्प्रतिषेधः।'' इति (निरुक्त- 11.18) धातु पाठेऽपि 'थुर्वी' हिंसायाम्

इति धातुना नञा सह अथर्वा अहिंसकः इत्यर्थः भवति। अतः अथर्वा गतिशीलार्थस्य विपर्ययेन अचलात्मकस्थिररूपी नित्यब्रह्मरूपस्य, नाम नित्यरूपक्य परमात्मनः विषयान् यो वेदो वर्णयति सोऽथर्ववेद इति सिध्यति। एवं हिंसाराहित्यविषयान् अस्मिन् संसारे सुखसन्तोषशान्त्यादीन् एवं सच्चिदानन्दादिब्रह्मज्ञानविषयान् यो वेदो बोधयति सः अथर्ववेद इति ज्ञायते। उक्तञ्च गोपथब्राह्मणे यत्-

**अथार्वाम् एनम् एतास्वेवाप्सु अन्विच्छेति तदथर्वाऽभवत्।**
**तदथर्वणोऽथर्वत्वम्।। ........ अथर्वा वै प्रजापतिः।।** (गो.ब्रा. 1.1.4) इति।

पूर्वोक्तवदथर्ववेदे नवशाखा आसन्निति पतञ्जलिमहर्षिणा कृत वैयाकरणमहाभाष्योक्त प्रमाणैर्लभ्यते। ताश्च शाखाः- पैप्पलादाः, तौदाः, मौदाः, शौनकीयाः, जाजलाः, जलदाः, ब्रह्मवदाः, वेददर्शाः चारणवैद्याश्चेति। तासु च नवशाखासु सम्प्रति अस्माकं भारतवर्षे केवलं शाखाद्वयं पैप्पलादशाखा, शौनकीयशाखा चेति द्वे एव अध्ययनाऽध्यापनपरम्परासु प्रवर्तेते। तत्र पैप्पलाद- अथर्वसंहितायां 'शं नो देवीरभिष्टये' इत्यारभ्य भवति। शौनकीय शाखान्तर्गते अथर्ववेदसंहितायामारभ्यसूक्तं 'ये त्रिषप्ताः' इति भवति। संहिताग्रन्थे विंशतिः काण्डानि। अथर्ववेदसंहितायां पूर्णतया एकादशोत्तर शतानुवाकाः सन्ति। मन्त्राश्चाखिलमन्त्रानपि मिलित्वा संहितायां सप्तसप्तत्युत्तरनवशताधिकपञ्चसहस्रमन्त्राः (5977) भवन्ति।

अथर्ववेदस्य शौनकीयशाखापरम्परारीत्या श्रौतस्मार्तयज्ञानुष्ठानप्रयोगाः अथर्ववैदिककल्पग्रन्थेषु उपलभ्यन्ते। उक्तञ्च-

**नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः।**
**तुर्य आङ्गिरसः कल्पः शान्तिकल्पश्च पञ्चमः।।** इति।

**वैतानश्रौतप्रयोगाः**- तत्र अथर्वसंहितामन्त्राननुसृत्य श्रौतस्मार्तयज्ञानुष्ठानविनियोगाः वैतानश्रौतसूत्रेषु एवं 'संहिताविधि' नाम्ना प्रसिद्धे कौशिकगृह्यसूत्रेषु च विहिताः सन्ति। वैतानश्रौतसूत्रेषु अथर्वणिकश्रौतकर्माणि, तत्र प्रधानतया समस्तश्रौतयज्ञानां निर्वहणाय ब्रह्मप्रयोगाः विहिताः। श्रौतयज्ञेषु ब्रह्मनामकस्य ऋत्विजः कर्तव्यानि विशेषतया नियमितानि। ब्रह्मण सहायकरूपेण सोमयागेषु पुनस्त्रयः ब्राह्मणाच्छंसि, आग्नीध्रः एवं पोता इति च सर्वेषां दीक्षानियमाः वर्णिताः। अग्न्याधान अग्निहोत्राद्यारभ्य दर्शपूर्णमासौ, आग्रयणेष्टिः,

चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः अतिरात्रः, अप्तोर्यामा चेति सप्तहविर्यज्ञाः सप्तसोमयज्ञाश्च विस्तरेण व्याख्याताः। एवं समस्तश्रौतयज्ञाः अयनयज्ञाश्च वैतानश्रौतसूत्रोदितानि सन्ति।

**गृह्यप्रयोगाः-**

**कौशिकगृह्यसूत्रेषु-** गृह्यस्थालीपाकतन्त्रेणानुष्ठीयमानयज्ञाः एवं आज्यतन्त्रविधानेन अनुष्ठीयमानयज्ञाश्च विस्तरेण अत्र विहिताः सन्ति। तत्र विशेषेण संस्कारकर्माणि, मेधाजननकर्माणि, ब्रह्मचारिणः सायम्प्रातरग्निपरिचर्याकर्माणि, सर्वसम्पदभिवृद्धिकर्माणि, तदङ्गतया पुत्र-पौत्र-सती-धन-धान्य-पशु-भू-ऐश्वर्यादीनां समृद्धिकर्माणि, राज्ञा क्रियमाणानि ग्राम-नगर-राष्ट्र-लाभकर्माणि, रक्षाकर्माणि, समस्तजनानां परस्परं सौमनस्यस्थापनकर्माणि, भूपालानुद्दिश्यक्रियमाणानि राजकर्माणि यथा शत्रुसेनानाशनकर्माणि, संग्रामविजयसाधनकर्माणि, परसेनामोहनस्तम्भनोच्चाटनादिकर्माणि, संग्रामविजयकर्माणि, राज्ञः स्थिररूपेण स्थापनाय अभिषेककर्माणि, सर्वपापविनाशकर्माणि, पौष्टिककर्मसु अन्तर्भूतानि चित्राकर्माणि, गोसमृद्धिकर्माणि, कृषिपुष्टिकर्माणि, जन्मजन्मान्तरकृतपापनिमित्तोद्भूतविविधरोगभैषज्यकर्माणि, सर्वरोगभैषज्यकर्माणि, तथा पुत्रादिकामस्त्रीकर्माणि, सुखप्रसवकर्माणि, सौभाग्यप्राप्तिकर्माणि, अभीष्टसिद्धिविज्ञानकर्माणि, दुर्दिनाशनिवृष्टिनिवारणकर्माणि, वृष्टिकर्माणि, वाणिज्यलाभकर्माणि, दुःस्वप्ननिवारणकर्माणि, पापनक्षत्रजननशान्तिकर्माणि, आभिचारकर्माणि, स्वस्त्ययनकर्माणि, दीर्घायुष्यप्राप्तिकर्माणि, एवं जातकर्मनामकरणोपनयनादिसंस्कारकर्माणि गृह्यसूत्रेषु वर्णितानि सन्ति। येषामनुष्ठानैः सर्वेजनाः योगक्षेमादि आनुकूल्यतां प्राप्नुवन्ति।

**शान्तिकल्पे** आथर्वणिकप्रयोगपद्धत्या कृत्तिकादिनक्षत्रदेवतानुद्दिश्य पूजाजपाभिषेकहोमाः, प्रकृतेः रक्षणाय, विश्वस्य कल्याणाय च विविधानि अद्भुतकर्मणां महाशान्तिकर्माणि, निर्ऋतिकर्माणि, अमृतशान्त्यादि अभयशान्तिपर्यन्तं त्रिंशत् महाशान्तिकर्माणि प्रतिपादितानि सन्ति। समस्तभूमण्डलस्य संरक्षणाय शान्तिकल्पे विशेषतया दिव्यन्तरिक्षादि-आपदां निवारणाय, लोकानां गतायुषां पुनर्जीवनाय, अग्निभयशत्रुभयादि विविधमहाभयनिवारणाय

एवं विविध आपदामपनोदनाय विविधप्रकारकाणि महाशान्तिकर्माणि अनुष्ठानप्रयोगैः सर्वान् लोकानुपकुर्वन्ति।

**आङ्गिरसकल्पः**- जगतः कल्याणाय सज्जनानां रक्षणाय तथा च दुष्टानां दुराचारिणां लोकण्टकानां शिक्षणाय वा विनाशाय च आभिचारकाणामनुष्ठानप्रयोगाणां प्रयोगाः विविधोपायाश्च आङ्गिरसकल्पे वर्णिताः सन्ति। तत्रादौ प्रयोगकर्तृणाम् आत्मरक्षाकरणानि, अभिचारकर्मानुष्ठानाय विशिष्टरीत्या यज्ञमण्डप, दीक्षा, हविर्द्रव्यादीनां सज्जीकरणानि तथा च विशेषतो आभिचारिकयज्ञानुष्ठानानि अनुष्ठीयन्ते। समाजस्य योगक्षेमाय लोकोपकाराय च आथर्वणतन्त्रोक्तानामाङ्गिरसकल्पे विहितानां यज्ञानुष्ठानानामतीव महत्वं वर्तते।
**अथर्वपरिशिष्टाख्य** आथर्वणिकयज्ञानुष्ठानप्रयोगाणामाकरग्रन्थेऽपि विश्वकल्याणाय अनेके प्रयोगाः निर्देशिताः सन्ति। तत्र राज्ञा अनुष्ठेयानि यज्ञानुष्ठानानि तथा लोकानामुपकाराय तथा च द्विपदां चतुष्पदाञ्च पशूनां ग्रामचराणां वनेचराणाञ्चोपयोगाय ग्रामेषु, नगरेषु, उपवनप्रदेशेषु च कूपतडागादीनां निर्माणप्रयोगाः विधिवदुपदिष्टाः सन्ति। आदित्यादि नवानां ग्रहाणामानुकूल्यतासिद्धये ग्रहशान्त्यादि-अनुष्ठानानि राज्ञा, विदुषा पुरोहितेन कारयेदिति निर्देशाः सन्ति ।भगवता सायणाचार्येण वेदभाष्ये निर्देशितमस्ति यत् **''पौरोहित्यं शान्तिकपौष्टिकानि राज्ञामथर्ववेदेन कारयेद् ब्रह्मन्वञ्चेति।''** उक्तञ्च विष्णुपुराणेऽपि यत्-

**शान्तिपुष्टयभिचारार्था एकब्रह्मर्त्विगाश्रयाः।**
**क्रियन्तेऽथर्ववेदेन त्रय्येवात्मीयगोचराः॥** इति।

सुवर्णधेनुभूमिदानादीनि अनुष्ठानानि राज्ञा प्रतिदिनमनुष्ठेयानि। रात्रीदेवी प्रतिमास्थापनं पूजनानि च । पुरोहितेन राज्ञः कृते मान्त्रिकरीत्या रक्षाकरणानुष्ठानानि कारयितव्यानि। राज्ञः समस्तपापक्षयार्थं घृतावेक्षणम्, तिलदानम्, हस्तिरथदानानुष्ठानम्, अश्वरथदानानुष्ठानम्, गोसहस्रविधिप्रयोगः, वृषोत्सर्गः, कोटिगायत्रीहोमः, अयुतहोमः, लक्षहोमः, घृतकम्बलविधिप्रयोगः, तटाकप्रतिष्ठापनम्, पाशुपतव्रतम्, एवमादीनि दानव्रतजपाभिषेकमार्जनब्राह्मणभोजनादीनि अनुष्ठानानि अथर्वपरिशिष्टग्रन्थे सङ्कलितानि सन्ति।

**विषयसंग्रहः**-

एवम्प्रकारैः अस्मिन् प्रथमपाठे वेदानां परिचयः अथर्ववेदस्य परिचयः, श्रौतयज्ञानां वैशिष्ट्यम्, अथर्ववेदस्य विश्वकल्याणाय बहुधा उपयोगित्वानि चेति विषयाः सङ्कलिताः।